अमानवैश्च पुरुषैः प्रापितो विरजां नदीम् ॥ ५ ॥
त्यक्त्वा तत्र शरीरं वै सङ्कल्पेनैव तां तरन् ।
दिव्यविग्रहसम्पन्नो ऽलंकृतो मानवैस्तदा ॥ ६ ॥
ब्राह्मया ऽलङ्कारवेषेण सत्कृतश्चाप्सरोगणैः ।
द्वारपालैः समागम्य तत्तत्स्थानमलौकिकम् ॥ ७ ॥
पश्यन्प्रमुदितो याति क्रमेण मणिमण्डपम् ।
दिव्यरत्नमये दिव्ये चासने लौकिके मुदा ॥ ८ ॥
श्रिया ऽनुरूपया युक्तं पार्षदैश्चा ऽऽयुधैस्तथा ।
दिव्यालङ्कारसम्पृक्तं श्रीमुकुन्दं च पश्यति ॥
सच्चिदानन्दमूर्तिं तं कल्याणगुणसागरम् ।
कृष्णं श्रियादिसहितं प्रणम्य तत्कृपार्द्रया ॥ १० ॥
दृशा ऽवलोकितस्तेन भाषितश्च मुदा गिरा ।
ध्रुवं तद्भावमापन्नो जक्षन् क्रीडंश्च ब्रह्मणा ॥ ११ ॥
गायन् सामानि तत्रास्ते रममाणश्च वैष्णवः ।
न पुनर्याति संसारं विष्णुलोकगतो मुनिः ॥ १२ ॥
संप्रदायानुसारेण शास्त्रोक्तेश्च समासतः ।
अलसानां विवेकार्थं मार्गो ऽयं संनिरूपितः ।
इति ॥ १३ ॥

अस्य विस्तरश्च प्रवन्धान्तरे द्रष्टव्यः भगवद्भावपदार्थश्च पूर्वस्मिं-श्लोके निरूपितः तेनेति ब्रह्मणा सहेत्यर्थः जक्षन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति श्रुतेः ।

अथकिमर्थोऽयं संदर्भश्रम इत्याशङ्क्याह—

विदुषां परितोषार्थं प्रसादार्थं श्रियः पतेः ।
वोधार्थं वालवुद्धीनां कृतः श्रुत्यर्थसंग्रहः ॥ ३ ॥

अथ ग्रन्थान्ते प्रार्थयते ।

श्रीहरे वल्लवीकान्त रुक्मिणीनाथ भूपते ।
संसाराब्धिनिमग्नानां प्रसादं कुरु केशव ॥ ४ ॥

इति श्रीअध्यात्मकारिकावली समाप्ताः ॥

प्रसीदतां हयग्रीवः श्रीनिवासो जगद्गुरुः ।
करोतु जगतां श्रेयः कारुण्यादिगुणार्णवः ॥ १ ॥
मङ्गलं गोपिकाप्रेष्ठो मङ्गलं कमलापतिः ।
सत्यभामाप्रियः कृष्णो मङ्गलं भक्तवत्सलः ॥ २ ॥

इति श्री अध्यात्मसुधातरङ्गिण्यां फलनिर्णयो
नाम चरमस्तरङ्गः ॥ ७ ॥

समाप्तश्चायं ग्रन्थः ॥